॥ दक्षिणामूर्तिस्तोत्रं सूतसंहिता ॥

प्रलंबितजटाबद्धं चन्द्ररेखावतंसकम् ।
नीलग्रीवं शरच्चन्द्रिकाभिर्विराजितम् ॥ १॥

गोक्षीरधवलाकारं चन्द्रबिंबसमाननम् ।
सुस्मितं सुप्रसन्नं च स्वात्मतत्त्वैकसंस्थितम् ॥ २॥

गङ्गाधरं शिवं शान्तं लसत्केयूरमण्डितम् ।
सर्वाभरणसंयुक्तं सर्वलक्षणसंयुतम् ॥ ३॥

वीरासने समासीनं वेदयज्ञोपवीतिनम् ।
भस्मधाराभिरामं तं नागाभरणभूषितम् ॥ ४॥

व्याघ्रचर्माम्बरं शुद्धं योगपट्टावृतं शुभम् ।
सर्वेषां प्राणिनामात्मज्ञापस्मारपृष्टतः ॥ ५॥

विन्यस्तचरणं सम्यग् ज्ञानमुद्राधरं हरम् ।
सर्वविज्ञानरत्नानं कोशभूतं सुपुस्तकम् ॥ ६॥

दधानं सर्वतत्त्वाक्षमालिकां कुण्डिकामपि ।
स्वात्मभूतपरानन्दपरशक्त्यर्ध विग्रहम् ॥ ७॥

धर्मरूपवृषोपेतं धार्मिकैर्वेदपारगैः ।
मुनिभिस्संवृतं मायावटमूलाश्रितं शुभम् ॥ ८॥

ईशानं सर्वविद्यानामीश्वरेश्वरमव्ययम् ।
उत्पत्त्यादिविनिर्मुक्तं ओङ्कारकमलासनम् ॥ ९॥

स्वात्मविद्याप्रदानेन सदा संसारमोचकम् ।
रुद्रं परमकारुण्यात्सर्वप्राणिहिते रतम् ॥ १०॥

उपासकानां सर्वेषामभीष्टसकलप्रदम् ।
दक्षिणामूर्तिदेवाख्यं जगत्स्वर्गादिकारणम् ॥ ११।
समागत्य महाभक्त्या दण्डवत्पृथिवीतले ।
प्रणम्य बहुशो देवं समाराध्य यथा बलम् ॥ १२॥

रुद्र यत्ते मुखं तेन दक्षिणं पाहि मामिति ।

उक्त्वा पुनः पुनर्देवं पूजयामास भक्तितः ॥ १३॥

॥ इति सूतसंहितान्तर्गतम् दक्षिणामूर्तिस्तोत्रम् ॥

# दक्षिणामूर्तिस्तोत्रं अथवा दक्षिणामूर्त्यष्टकम्

ॐ यो ब्रह्माणं विदधाति पूर्वम्
यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

ॐ शांतिः शांतिः शांतिः

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया ।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १॥

बीजस्यान्तरिवाङ्कुरो जगदिदं प्राङ्निर्विकल्पं पुनः
मायाकल्पितदेशकालकलनावैचित्र्यचित्रीकृतम् ।
मायावीव विजृम्भयत्यपि महायोगीव यः स्वेच्छया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ २॥

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थकं भासते
साक्षात्तत्त्वमसीति वेदवचसा यो बोधयत्याश्रितान् ।
यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवाम्भोनिधौ
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ३॥

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं
ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते ।
जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ४॥

देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः
स्त्रीबालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः ।
मायाशक्तिविलासकल्पितमहा व्यामोहसंहारिणे
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ५॥

राहुग्रस्तदिवाकरेन्दुसदृशो मायासमाच्छादनात्
सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान् ।
प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ६॥

बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि
व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा ।
स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ७॥

विश्वं पश्यति कार्यकारणतया स्वस्वामिसंबन्धतः
शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः ।
स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामितः
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ८॥

भूरम्भांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमान्
इत्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभोः
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ९॥

सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिन् स्तवे
तेनास्य श्रवणात्तदर्थमननाद्ध्यानाच्च सङ्कीर्तनात् ।
सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः var ततः
सिद्ध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम् ॥ १०॥

वटविटपिसमीपे भूमिभागे निषण्णं
सकलमुनिजनानां ज्ञानदातारमारात् ।
त्रिभुवनगुरुमीशं दक्षिणामूर्तिदेवं
जननमरणदुःखच्छेददक्षं नमामि ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ दक्षिणामूर्त्यष्टकं सम्पूर्णम् ।

॥ श्रीदक्षिनणामूर्तिस्तोत्रम् २ ॥

उपासकानां यदुपासनीयमुपात्तवासं वटशाखिमूले ।
तद्धाम दाक्षिण्यजुषा स्वमूर्त्या जागर्तु चित्ते मम बोधरूपम् ॥ १॥

अद्राक्षमक्षीणदयानिधानमाचार्यमाद्यं वटमूलभागे ।
मौनेन मन्दस्मितभूषितेन महर्षिलोकस्य तमो नुदन्तम् ॥ २॥

विद्राविताशेषतमोगणेन मुद्राविशेषेण मुहुर्मुनीनाम् ।
निरस्य मायां दयया विधत्ते देवो महांस्तत्त्वमसीति बोधम् ॥ ३॥

अपारकारुण्यसुधातरङ्गैरपाङ्गपातैरवलोकयन्तम् ।
कठोरसंसारनिदाघतप्तान्मुनीनहं नौमि गुरुं गुरूणाम् ॥ ४॥

ममाद्यदेवो वटमूलवासी कृपाविशेषात्कृतसन्निधानः ।
ओंकाररूपामुपदिश्य विद्यामाविद्यकध्वान्तमपाकरोतु ॥ ५॥

कलाभिरिन्दोरिव कल्पिताङ्गं मुक्ताकलापैरिव बद्धमूर्तिम् ।
आलोकये देशिकमप्रमेयमनाद्यविद्यातिमिरप्रभातम् ॥ ६॥

स्वदक्षजानुस्थितवामपादं पादोदरालंकृतयोगपट्टम् ।
अपस्मृतेराहितपादमङ्गे प्रणौमि देवं प्रणिधानवन्तम् ॥ ७॥

तत्त्वार्थमन्तेवसतामृषीणां युवाऽपि यः सन्नुपदेष्टुमीष्टे ।
प्रणौमि तं प्राक्तनपुण्यजालैराचार्यमाश्चर्यगुणाधिवासम् ॥ ८॥

एकेन मुद्रां परशुं करेण करेण चान्येन मृगं दधानः ।
स्वजानुविन्यस्तकरः पुरस्तादाचार्यचूडामणिराविरस्तु ॥ ९॥

आलेपवन्तं मदनाङ्गभूत्या शार्दूलकृत्त्या परिधानवन्तम् ।
आलोकये कञ्चन देशिकेन्द्रमज्ञानवाराकरवाडवाग्निम् ॥ १०॥

चारुस्मितं सोमकलावतंसं वीणाधरं व्यक्तजटाकलापम् ।
उपासते केचन योगिनस्त्वामुपात्तनादानुभवप्रमोदम् ॥ ११॥

उपासते यं मुनयः शुकाद्या निराशिषो निर्ममताधिवासाः ।
तं दक्षिणामूर्तितनुं महेशमुपास्महे मोहमहार्तिशान्त्यै ॥ १२॥

कान्त्या निन्दितकुन्दकन्दलवपुर्न्यग्रोधमूले वस -
    न्कारुण्यामृतवारिभिर्मुनिजनं संभावयन्वीक्षितैः ।
मोहध्वान्तविभेदनं विरचयन्बोधेन तत्तादृशा
    देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिना ॥ १३॥

अगौरगात्रैरललाटनेत्रैरशान्तवेषैरभुजङ्गभूषैः ।
अबोधमुद्रैरनपास्तनिद्रैरपूर्णकामैरमरैरलं नः ॥ १४॥

दैवतानि कति सन्ति चावनौ नैव तानि मनसो मतानि मे ।
दीक्षितं जडधियामनुग्रहे दक्षिणाभिमुखमेव दैवतम् ॥ १५॥

मुदिताय मुग्धशशिनावतंसिने भसितावलेपरमणीयमूर्तये ।
जगदीन्द्रजालरचनापटीयसे महसे नमोऽस्तु वटमूलवासिने ॥ १६॥

व्यालम्बिनीभिः परितो जटाभिः कलावशेषेण कलाधरेण ।
पश्यँल्ललाटेन मुखेन्दुना च प्रकाशसे चेतसि निर्मलानाम् ॥ १७॥

उपासकानां त्वमुमासहायः पूर्णेन्दुभावं प्रकटीकरोषि ।
यदद्य ते दर्शनमात्रतो मे द्रवत्यहो मानसचन्द्रकान्तः ॥ १८॥

यस्ते प्रसन्नामनुसन्दधानो मूर्तिं मुदा मुग्धशशाङ्कमौलेः ।
ऐश्वर्यमायुर्लभते च विद्यामन्ते च वेदान्तमहारहस्यम् ॥ १९॥

॥ दक्षिणामूर्तिस्तोत्रं २ सम्पूर्णम्॥